अपार इति ॥ उच्चैस्तरेष्वपि रथेष्वपारेऽगाधेऽसृक्सरित्पूरे रुधिरनदीप्रवाहे मज्जत्सु सत्सु रथिनो रथारोहाः क्रुद्धाः । अत एव हुंकृतैः भीषयन्त इति शेषः । अभिरिपुं शत्रुसंमुखं शरान्व्यसृजंस्तत्यजुः ॥

खड्गनिर्लूनमूर्धानो[1]ऽ्यापतन्तोऽपि वाजिनः ।
प्रथमं पातयामासुरसिना दारितानरीन् ॥ २६ ॥

खड्गेति ॥ खड्गनिर्लूनमूर्धानः करवालकृत्तशिरसः । अत एव वाजिनोऽश्वा-
व्यापतन्तोऽप्यसिना खड्गेन दारितान्विदीर्णानरीन्प्रथमं पातयामासुः । पुनः स्वयं पेतुरिति शेषः । अत्र 'दारयित्वासिना रिपून्' इति पाठः साधीयान् ॥

वीराणां शस्त्रभिं[2]न्नानि शिरांसि निपतन्त्यपि ।
अधावं[3]न्दन्तदष्टोष्ठभीमान्यभिरिपुं क्रुधा ॥ २७ ॥

वीराणामिति ॥ शस्त्रभिन्नान्यत एव निपतन्त्यपि दन्तैर्दष्टाः पीडिता य ओष्ठा अधरास्तैर्भीमानि घोराणि वीराणां शिरांसि क्रुधाभिरिपु वैरिसंमुखमधावन् ॥

शिरांसि वरयोधानामर्धचन्द्रहृतान्यलं[4]म् ।
आ[5]ददाना भृशं पादैः श्येना व्यानशिरे [6]नभः ॥ २८ ॥

शिरांसीति ॥ अर्धचन्द्रहृतान्यर्धचन्द्राकारबाणकर्तितानि वरयोधानां शिरांसि । पादैराददाना गृह्णन्तः श्येनाः पक्षिविशेषा भृशमतिशयेन नभो व्यानशिरे व्यापुः । सर्वस्मिन्नेव नभसि श्येननीतमस्तकान्येव जातानीति भावः ॥

क्रोधादभ्यापतद्दन्तिदन्ता[7]रूढाः पदातयः ।
[8]अश्वारोहा गजारोहप्राणान्प्रासैरपाहरन् ॥ २९ ॥

क्रोधादिति ॥ पदातयः पद्गतयोऽश्वारोहाश्च क्रोधाद्धेतोरभ्यापततां संमुख-
मागच्छतां दन्तिनां दन्तेष्वारूढाः सन्तः प्रासैः कुन्तैर्गजारोहप्राणान्यन्तृणाम-
सूनपाहरन् ॥

शस्त्रच्छिन्नगजारोहा विभ्रमन्त इतस्ततः ।
युगान्तवातचलिताः शैला इव गजा बभुः ॥ ३० ॥

शस्त्रेति ॥ शस्त्रैश्छिन्ना गजारोहा येषामत एवेतस्ततो विभ्रमन्तो गजाः युगान्तवातैः प्रलयप्रभञ्जनैश्चालिता उत्पातिताः शैला इव बभुः शुशुभिरे ॥

मिलितेषु मिथो योद्धुं दन्तिषु प्रसभं भटाः ।
अगृह्णन्युध्य[9]मानाश्च शस्त्रैः प्राणान्परस्परम् ॥ ३१ ॥

मिलितेष्विति ॥ योद्धुं मिलितेषु दन्तिषु । आरूढा इति शेषः । भटा मिथो-
ऽन्योन्यं युध्यमानाः प्रसभं बलाच्छस्त्रैः कृत्वा परस्परं प्राणानगृह्णन् ॥

---

१ व्यापतन्तः. २ भिन्नानाम्. ३ दन्तदष्टौष्ठभीषणान्यरिषु. ४ अपि. ५ आदधानाः. ६ दिशः. ७ दन्तारूढेषु वाजिषु; दन्तारूढा नृवाजिषु. ८ अक्षारूढाः. ९ सहयुध्यानः.

रु[1]षा मिथो मिलद्दन्तिदन्तसंघर्षजोऽनलः ।
योधाञ्शस्त्रहतप्राणानदहत्स[2]हसारिभिः ॥ ३२ ॥

रुषेति ॥ रुषा क्रोधेन मिथोऽन्योन्यं मिलतां दन्तिनां ये दन्तास्तेषां संघर्षाञ्जातोऽनलोऽग्निररिभिर्वैरिभिः शस्त्रैर्हताः प्राणा येषां तान्योधान्सहसाकस्मादददहत्प्लुष्टोष ॥

[3]आक्षिप्ता अपि [4]दन्तीन्द्रैः कोपनैः पत्तयः [5]परम् ।
[6]तदसूनहरन्खड्ग[7]घातैः स्वस्य पुरः प्रभोः ॥ ३३ ॥

आक्षिप्ता इति ॥ परमतिशयितं कोपनैः क्रुद्धैर्दन्तीन्द्रैराक्षिप्ता अपि । आक्षेप्तुं शुण्डेन गृहीता अपीत्यर्थः । पत्तयः पादचारिणः स्वस्य प्रभोः पुरः खड्गघातैस्तदसून्दन्तीन्द्रप्राणानहरन्नगृह्णुः ॥

उत्क्षिप्य करिभिर्दू[8]रान्मुक्तानां योधिनां दिवि[9] ।
प्रापि जीवात्मभिर्दि[10]व्या गतिर्वा विग्रहैर्मही ॥ ३४ ॥

उत्क्षिप्येति ॥ करिभिरुत्क्षिप्योत्थाप्य दिवि दूरान्मुक्तानां योधिनां जीवात्मभिर्जीवैः । प्राणैरिति यावत् । दिव्या स्वर्गीया गतिः प्रापि । विग्रहैर्देहैर्मही वा प्रापि प्राप्ता । कर्मणि लुङ् ॥

खड्गैर्धवलधारालैर्निहत्य करिणां करान् ।
[11]तैर्भुवापि समं [12]विद्धान्संतोषं न भटा ययुः ॥ ३५ ॥

खड्गैरिति ॥ भटा योधा धवलधारालैर्धवलां धारां लान्ति गृह्णन्ति तैः । शुभ्रधारैरित्यर्थः । अद्वितीयैः खड्गैः कृत्वा भुवा पृथिव्या समं विद्धान्प्रहतान्करिणां कराञ्शुण्डादण्डान्निहत्यापि लवित्वापि संतोषं तृप्तिं न ययुः । अन्यानपि निहन्मीति बुद्धिमन्तो बभूवुरित्यर्थः ॥

[13]आक्षिप्याभिदिवं नीताः पत्तयः करिभिः करैः ।
दिव्याङ्गनाभिरादातुं रक्ताभिर्द्रुत[14]मीषिरे ॥ ३६ ॥

आक्षिप्येति ॥ करिभिः कर्तृभिः । करैर्दण्डैः कृत्वाक्षिप्योत्थाप्याभिदिवमाकाशसंमुखं नीताः प्रापिताः पत्तयः पादचारिणो रक्ताभिरनुरक्ताभिर्दिव्याङ्गनाभिर्द्रुतं शीघ्रमादातुं ग्रहीतुमीषिरे इष्टा बभूवुः । अहमेतान्ग्रहीष्यामि, अहमेतान्ग्रहीष्यामीति त्वरिता बभूवुः ॥

---

१ गजारूढान्. २ सह सादिभिः. ३ उत्क्षिप्ता. ४ हस्तीन्द्रैः. ५ करैः. ६ ते रिपूनहनन्; तद्रिपूनहरन्. ७ खड्गपातैः. ८ दूरम्. ९ दिवः. १० दिव्याङ्गनाकण्ठपरिग्रहः; दिव्याङ्गनैषां विग्रहैर्मही. ११ यैः. १२ वृद्धं शङ्कया तान्पत्तमोऽहरन्. १३ उत्क्षिप्य. १४ वृतमम्बरम्; व्याप्तमम्बरम्.

धन्विनस्तुरगारूढा गजारोहाञ्शरैः क्षतान् ।
[1]प्रत्यैच्छन्मूर्च्छितान्भूयो योद्धुमाश्वसतश्चिरम् ॥ ३७ ॥

धन्विन इति ॥ तुरगारूढा धन्विनो धनुर्धारिणो योधाः शरैः क्षतान् । अत एव मूर्च्छितान्गजारोहान्यन्तॄन्भूयोऽपि पुनरपि योद्धुमाश्वसतो जीवत एतादृशांश्चिरं प्रत्यैच्छन् । प्रतीक्षन्ते स्मेत्यर्थः ॥

क्रुद्धस्य [2]दन्तिनः पत्तिर्जिघृक्षोरसिना करम् ।
निर्भिद्य [3]दन्तमुसलावारुरोह जिघृक्षया ॥ ३८ ॥

क्रुद्धस्येति ॥ पत्तिः पादचारी कश्चिद्योधः क्रुद्धस्यात एव जिघृक्षोर्गृहीतुमिच्छोर्दन्तिनः करं दन्तयोरधोभागम् । असिना निर्भिद्य छित्वा जिघृक्षया प्रत्युत तस्यैव गृहीतुमिच्छया दन्तमुसलावारुरोहारूढवान् ॥

खड्गेन [4]मूलतो हत्वा दन्तिनो [5]रदनद्वयम् ।
[6]प्रातिपक्ष्ये प्रविष्टोऽपि पदातिर्निरगाद्द्रुतम् ॥ ३९ ॥

खड्गेनेति ॥ प्रातिपक्ष्ये शत्रुसंबन्धिनि सैन्ये प्रविष्टोऽपि पदातिः पादचारी दन्तिनो गजस्य रदनद्वयं दन्तद्वयं खड्गेन कृत्वा मूलतो मूलाद्धत्वा भित्त्वा द्रुतं निरगान्निश्चक्राम । शत्रुसैन्यप्रविष्टस्य मरणमेव ध्रुवम्, तदस्य विपरीतमभूदित्यपिना द्योत्यते ॥

करेण करिणा वीरः सुगृहीतोऽपि कोपिना ।
असिनासूञ्जहाराशु तस्यैव स्वयमक्षतः ॥ ४० ॥

करेणेति ॥ कोपिना क्रुद्धेन करिणा दन्तिना कर्त्रा । करेण कृत्वा सुतरां गृहीतोऽपि वीरोऽसिना खड्गेन तस्यैव करिण एवासून्प्राणाञ्जहार हृतवान् । स्वयमक्षतोऽभूत् ॥

[7]तुरंगी तुरगारूढं प्रासेनाहत्य वक्षसि ।
पततस्तस्य नाज्ञासीत्[8]प्रासघातं स्वके हृदि ॥ ४१ ॥

तुरंगीति ॥ तुरंग्यश्वारोहः कश्चिद्योद्धा तुरगारूढमश्ववारं प्रासेन कुन्तेन वक्षस्याहत्य ताडयित्वा पततस्तस्याश्ववारस्य कर्तृकं स्वक आत्मीये हृदि प्रासघातं कुन्तक्षतं नाज्ञासीन्न विजज्ञे । तदीयपतनजानन्दस्योद्रेकत्वादिति भावः ॥

द्विषा प्रासहृतप्राणो वाजिपृष्ठदृढासनः ।
[9]हस्तोद्धृतमहाप्रासो [10]भुवि जीवन्[11]निवाभ्रमत् ॥ ४२ ॥

---

१ प्रत्यैक्षन्. २ करिणः. ३ दन्तमुसलान्; दन्तमुसलकेन. ४ आमूलतः. ५ अक्षिपद्द्वयम्. ६ प्रपतिष्णोः. ७ तुरगी. ८ प्रासपातम्. ९ हस्तोद्धत-महाप्रासाः. १० भटः. ११ अभवत्.

द्विषेति ॥ द्विषा शत्रुणा प्रासेन कृत्वा हतप्राणो मारितः । तथा वाजि-पृष्ठेऽश्वपृष्ठभागे दृढासनः । प्राग्दृढासनत्वान्मृतत्वे दृढत्वं युक्तम् । तथा हस्त उद्धृतो मधुप्रासो येन तथाभूतः कश्चिज्जीवन्निव भुव्यभ्रमत् । अश्वभ्रमणव-शाच्चमत्कृतोऽशव इव लक्षित इति भावः ॥

तुरंगसादिनं शस्त्रहृतप्राणं मतं भुवि ।
अबद्धोऽपि महावाजी न[1] साश्रुनयनोऽत्यजत् ॥ ४३ ॥

तुरंगेति ॥ अबद्धोऽप्यनिरुद्धोऽपि महावाजी महानश्वः साश्रुणी सबाष्पे नयने यस्य तथाभूतः सन् । शस्त्रहृतप्राणमत एव भुवि गतं तुरंगसादिनमश्ववारं नात्यजन्न जहौ । किंतु तज्जीवनमपेक्षमाणस्तत्रैव तस्थावित्यर्थः ॥

भल्लेन[3] शितधारेण भिन्नोऽपि रिपुणाश्वगः ।
नामूर्च्छत्कोपतो हन्तुमियेष प्रपतन्नपि[4] ॥ ४४ ॥

भल्लेनेति ॥ रिपुणा कर्त्रा । शितधारेण तीक्ष्णधारेण भल्लेन भिन्नोऽपि विदारितोऽप्यश्वगस्तुरंगगामी कोपतः क्रोधवशान्नामूर्च्छन्न मुह्यति स्म । किंतु प्रपतन्नप्यश्वादधः स्रंसमानोऽपि रिपुं हन्तुमियेषैच्छत् ॥

मिथः प्रासाहतौ[5] वाजिच्युतौ भूमिगतौ रुषा ।
शस्त्र्या[6] युयुधतुः कौचित्केशाकेशि भुजाभुजि ॥ ४५ ॥

मिथ इति ॥ मिथोऽन्योन्यं प्रासेनाहतौ । अत एव वाजिभ्यां सकाशाच्च्युतावधः पतितौ । अत एव भूमिं गतौ कौचिद्योधौ रुषा युतौ सन्तौ शस्त्र्या खड्गपुत्र्या युयुधतुर्युयुधाते । अथ च केशाकेशि केशेषु केशेषु गृहीत्वा प्रवृत्तं यद्युद्धम्, भुजाभ्यां भुजाभ्यां प्रहृत्य प्रवृत्तं यद्युद्धं तदभूत् । 'तत्र तेनेदमिति सरूपे' इति सूत्रेण समासः ॥

रथिनो रथिभिर्बाणैर्हृतप्राणा दृढासनाः ।
क्षत[7]कार्मुकसंधानाः सप्राणा इव मेनिरे[8] ॥ ४६ ॥

रथिन इति ॥ रथिभी रथारोहैः कर्तृभिः । बाणैः कृत्वा हृतप्राणास्तथा दृढासनाः क्षतं नष्टं कार्मुकसंधानं धनुःसज्जीकरणं येषामेवंभूता रथिनो रथारोहाः सप्राणा इव जीवन्त इव मेनिरे मताः । कर्मणि लिट् । द्रष्टृभिरिति शेषः ॥

न रथी रथिनं भूयः प्राहरच्छस्त्रमूर्च्छितम् ।
प्रत्याश्वसन्तं[9]मन्विच्छन्[10]नातिष्ठद्युधि लोभतः ॥ ४७ ॥

---

१ अश्वाढ्यः; अश्वाद्यः. २ नाश्रुस्तनयनः. ३ खड्गेन. ४ च पतन्; निपतन्. ५ प्रासहतौ; प्रहारतः. ६ शस्त्रैः. ७ कृत. ८ रेजिरे. ९ मत्वैनम्. १० नागा-युद्धमलोभतः.

नेति ॥ रथी रथारोहः सखेण मूर्च्छितमचेतितं रथिनं सूतो न प्राहरत् । किंतु पुनरपि युधि लोभतो लोभेन । तृतीयार्थे तसिः । प्रत्यागतसत्त्वं पुनरागमनमभिवाञ्छन्नपेक्षमाणः सन्नतिष्ठत् ॥

अन्योन्यं रथिनौ कौचिद्धतप्राणौ दिवं गतौ ।
एकामप्सरसं प्राप्य युयुधाते वरायुधौ ॥ ४८ ॥

अन्योन्यमिति ॥ वरायुधौ श्रेष्ठायुधौ कौचिद्रथिनावन्योन्यं परस्परेण कृत्वा गतप्राणौ गमितासू अत एव दिवं गतावेकामप्सरसं प्राप्य युयुधाते । अहमेतां ग्रहीष्यामि, अहमेतां ग्रहीष्यामीति वदन्तौ कलहं चक्रतुरित्यर्थः ॥

मिथोऽर्धचन्द्रनिर्लूनमूर्धानौ रथिनौ रुचा ।
खेचरौ भुवि नृत्यन्तौ स्वकबन्धावपश्यताम् ॥ ४९ ॥

मिथ इति ॥ मिथोऽन्योन्यमर्धचन्द्रेण तदाकारबाणेन निर्लूनमूर्धानौ छिन्नमस्तकावत एव खेचरावाकाशचारिणौ रुचा कान्त्या युतौ कौचिद्रथिनौ रथारोहौ कर्तारौ । भुवि नृत्यन्तौ गात्रं विक्षिपन्तौ स्वकबन्धौ शिरोरहितस्वदेहौ कर्म । अपश्यतां दृष्टवन्तौ ॥

रणाङ्गणे शोणितपङ्कपिच्छिले कथं कथंचिन्ननृतुर्धृतायुधाः ।
नदत्सु तूर्येषु परेतयोषितां गणेषु गायत्सु कबन्धराजयः ॥५०॥

रणेति ॥ तूर्येषु नदत्सु सत्सु, परेतयोषितां भूताङ्गनानां गणेषु गायत्सु सत्सु, धृतायुधाः कबन्धराजयः शिरोरहितदेहपङ्क्तयः शोणितपङ्कपिच्छिले रुधिरकर्दमलिप्ते । अनेन स्निग्धत्वमुक्तम् । रणाङ्गणे सङ्ग्रामचत्वरे कथं कथंचिन्ननृतुः कष्टेन ननृतुर्गात्रं विचिक्षिपुः । भूमेरतिस्निग्धतया पादयोः स्थैर्येण स्थापनासंभवान्नृत्ये प्रयत्नो योग्य इति भावः । एषां श्लोकानां स्फुटार्थत्वाद्विस्तरेण विवृतिर्नोक्ता । प्रसङ्गादव्यक्तनिर्धारणेन लाघवाधकारि । अतः क्षन्तव्यमित्यलम् । उपजातिर्वृत्तम् ॥

इति सुररिपुर्वृत्ते युद्धे सुरासुरसैन्ययो
रुधिरसरितां मज्जद्दन्तिव्रजेषु तटेष्वलम् ।
अरुणनयनः क्रोधाद्भीमभ्रमद्भ्रुकुटीमुखः
सपदि ककुभामीशानभ्यामगत्स युयुत्सया ॥५१॥

इतीति ॥ इति पूर्वोक्तप्रकारेण सुरासुरसैन्ययोर्देवदैत्यसैन्ययोर्युद्धे सङ्ग्रामे वृत्ते भूते सति । तथा रुधिरसरितां शोणितनदीनां तटेषु मज्जन्तो निमग्नीभवन्तो दन्तिव्रजा गजसमूहा येषु तथाभूतेषु सत्सु । अलमतिशयेन क्रोधाद्रोषो-

---

१ हतप्राणौ; हतप्राणो. २ रुषितौ. ३ रुषा. ४ खचरैः. ५ शोभित. ६ क्रोधापीनभ्रमद्भ्रुकुटीमुखः; क्रोधासीनभ्रमद्भ्रुकुटीमुखः.

रक्तनयनो रक्तलोचनः । तथा भीमे भयानके भ्रमती विवर्तमाने भ्रुकुटीमुखे भ्रुकुट्योरग्रे यस्य तथोक्तः स सुररिपुस्तारको युयुत्सया योद्धुमिच्छया सपदि तत्क्षणमेव ककुभां दिशामीशानिन्द्रादीनष्टदिक्पालानभ्यागमत्संमुखमाजगाम । हरिणी वृत्तम्—'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति लक्षणात् ।

इति श्रीपर्वणीकरोपनामकश्रीलक्ष्मणभट्टात्मजसतीगर्भसंभवश्रीसीताराम-
कविविरचितया संजीविनीसमाख्यया व्याख्यया समेतः श्री-
कालिदासकृतौ कुमारसंभवे महाकाव्ये सुरासुरसैन्य-
सङ्ग्रामवर्णनं नाम षोडशः सर्गः ॥

## सप्तदशः सर्गः ।

इदानीं तारकवधं चिकीर्षुस्तत्रभवान्कालिदासः सप्तदशतमं सर्गमारभते—

दृष्ट्वाभ्युपेतमथ दैत्यपतिं[1] पुरस्ता-
त्सङ्ग्रामकेलिकुतुकेन घनप्रमोदम्[2] ।
योद्धुं मदेन मिमिलुः ककुभामधीशा
बाणान्धकारितदिगम्बरगर्भमेत्य[3] ॥ १ ॥

दृष्ट्वेति ॥ अथ तारकसंमुखगमनानन्तरम् । एते ककुभामधीशा इन्द्रादयोऽष्टौ दिक्पालाः । सङ्ग्रामः समरः स एव केलिः क्रीडा । न तु प्रयत्नसाध्यं कर्मेति भावः । तत्र यत्कुतुकं कौतूहलम् । तदनुभवहेतुक उत्साह इति यावत् । तेन घनः सान्द्रः । बहुल इति यावत् । यः प्रमोद आनन्दः स यस्य । तथा बाणैरन्धकारितः संजातान्धकारी कृतो दिशामम्बरस्य च गर्भः कुक्षिः । मध्य इति यावत् । येन । तथाभ्युपेतं संमुखमागतं दैत्यपतिं तारकं दृष्ट्वा विलोक्य योद्धुं संप्रहर्तुं मदेन गर्वेण । वीररसानुभावेनेति यावत् । मिमिलुः संयुयुजुः । सर्गेऽस्मिन्वसन्ततिलका वृत्तम्—'उक्ता वसन्ततिलका तभजा जगौ गः' इति लक्षणात् ॥

देवद्विषां परिवृढो विकटं विहस्य
बाणावलीभिरमरान्विकटान्ववर्ष[4] ।
शैलानिव प्रवरवारिधरो[5] गरिष्ठा-
नद्भिः पराभिरथ गाढमनारताभिः ॥ २ ॥

---

१ तं च पतिम्. २ प्रसादम्. ३ भक्तिम्. ४ अभितः कुपितो ववर्ष. ५ प्रबलवारिधरो गरिष्ठानम्भस्ततीभिः; प्रबलवारिधरोपरिष्टानम्भस्ततीभिः; प्रचुरवारिधरो गरिष्ठानम्भस्ततीभिः.

**देवेति** ॥ अथानन्तरं देवद्विषामसुराणां परिबृढो नायकस्तारको विकटं यथा स्यात्तथा । 'विकटः सुन्दरे प्रोक्तो विशालविकरालयोः' इति विश्वः । विहस्य हसित्वा । अट्टाट्टहासं कृत्वेत्यर्थः । अट्टाट्टहासोऽत्र रुडभिव्यञ्जकः, न तु सुरसैन्यविषयिणोऽवहेलनस्य । तत्र शांकरेरधिष्ठितत्वात् । विहस्येत्यत्र वेर्व्यर्थत्वं नाशङ्कनीयम् । विकटत्वेऽपि विशेषाधानात् । प्रवरः प्रकर्षेण श्रेष्ठः । वर्षाकालिक इति यावत् । स चासौ वारिधरो मेघो गरिष्ठानतिशयगुरूञ्शैलान् । उद्दिश्येति शेषः । पराभिरुत्कृष्टाभिरनारताभिर्निरन्तरं पतन्तीभिरद्भिर्जलैरिव विकटान्करालानमरानिन्द्रादिदेवान् । उद्दिश्येति शेषः । बाणावलीभिः शरपङ्क्तिभिः कृत्वा ववर्ष वृष्टिमकार्षीत् ॥

जम्भद्विषत्प्रभृतिदिक्पतिचापमुक्ता
बाणाः शिता[1] दनुजनायकबाणसङ्घान्[2] ।
अह्नाय तार्क्ष्यनिवहा इव नागपूगा-
न्सद्यो विचिच्छिदुरलं कणशो रणान्ते ॥ ३ ॥

**जम्भद्विषदिति** ॥ दनुजानां दैत्यानां नायकस्य स्वामिनस्तारकस्य संबन्धिनो बाणसङ्घाञ्शरसमूहान्कर्मभूतान् । जम्भद्विषत्प्रभृतयो महेन्द्रादयो ये दिक्पतयो दिगधिपास्तैः कर्तृभिः । चापेभ्यो मुक्ता विसृष्टाः शितास्तीक्ष्णा बाणाः शराः । नागपूगान्सर्पव्रजान् । 'नागः पन्नगमातङ्गक्रूराचारिषु तोयदे' इति, 'पूगस्तु क्रमुके वृन्दे' इति च विश्वः । अह्नाय शीघ्रम् । 'द्राग्झटित्यञ्जसाह्नाय' इत्यमरः । तार्क्ष्यनिवहा गरुडसमूहा इव । 'तार्क्ष्यं रसाञ्जने तार्क्ष्यो गरुडे गरुडाग्रजे' इति विश्वः । रणान्ते सङ्ग्राममध्ये सद्यः सपद्यलमतिशयेन कणशो विचिच्छिदुर्बिभिदुः । कणश इति 'बह्वल्प–' इति शस् ॥

तान्[3]प्रज्वलत्फलमुखैर्विषमैः[4] सुरारि-
नामाङ्कितैः पिहितदिग्गगनान्तरालैः ।
आच्छादितस्तृणचयानिव[5] हव्यवाह-[6]
श्चिच्छेद सोऽपि सुरसैन्यशराञ्शरौघैः ॥ ४ ॥

**तानिति** ॥ सोऽपि तारकोऽपि प्रकर्षेण ज्वलन्ति दीप्यमानानि फलानां फलकानाम् । अयोनिर्मितपुरोभागानामिति यावत् । 'फलं हेतुकृते जातीफले फलकसस्ययोः' इति मेदिनी । मुखान्यग्राणि येषाम् । अत एव विषमैर्दुःसहैः । तथा सुरारिनाम्ना तारक इति वर्णपाठ्याङ्कितैर्युक्तैः । तथा पिहितमाच्छादितं

---

१ शिताम्. २ असुरराजकबाण. ३ ते; तैः;. ४ विशिखैः सुरारिम्; समरेऽसुरारिम्. ५ प्राच्छादयंस्तृणचयैरिव. ६ हव्यवाहम्.

दिशां गगनस्याम्बरस्य चान्तरालं मध्यं यैस्तथाभूतैः शरौघैर्बाणसङ्घैः कृत्वा अनतिद्वितीयान्सुरसैन्यस्य देवसैन्यस्य शरान् । आच्छादित उपर्यावृतो हव्यवाहोऽग्निस्तृणचयानिव घासराशीनिव । चिच्छेद ज्वालयति भस्मीकरोतीत्यर्थः । हव्यवाहस्य तृणचयभस्मीकरणे यावान्प्रयत्न उद्भवति तावानेव सुरशरभस्मसात्करणे । इत्यतोऽसुरबाणानां सामर्थ्यातिशयो ध्वन्यत इत्यलंकारेण वस्तुध्वनिः ॥

दैत्येश्वरो ज्वलितरोषविशेषभीमः
सद्यो मुमोच युधि यान्विशिखान्सहेलः[1] ।
ते प्रापुरुद्भटभुजंगमभीमभावं
गाढं[2] बबन्धुरपि तांस्त्रिदशेन्द्रमुख्यान्[3] ॥ ५ ॥

दैत्येश्वर इति ॥ ज्वलितः प्रदीप्तो यो रोषः क्रोधः । 'कोपक्रोधामर्षरोषप्रतिघा.' इत्यमरः । तस्य विशेष आधिक्यं तेन भीमो घोरो दैत्येश्वरस्तारकः । युधि युद्धविषये सहेलः किमेतद्युद्धमित्यनादरसहितः सन् । यान्विशिखान्बाणान् । 'विशिखो लोमशे शरे' इति विश्वः । मुमोच विससर्ज । ते शराः सद्यः सपद्युद्भटा विकटा ये भुजंगमाः सर्पाः, भीमा भयानकास्तद्भयभावं तद्भयत्वं प्रापुः । सत्यपि भुजंगमत्वे भीमत्वस्यैच्छिकत्वात्पृथग्व्यपदेशः । अथ च त्रिदशेन्द्रमुख्यानिन्द्रप्रभृतींस्तान्देवान्गाढं दृढं यथा तथा बबन्धुरपि । अपिरत्र प्राप्तिक्रियापेक्षया समुच्चयार्थः । 'अपिः संभावनाप्रश्नशङ्कागर्हासमुच्चये' इति विश्वः । इन्द्रप्रभृतयो देवास्तारकोन्मुक्तनागपाशबद्धा बभूवुरित्यर्थः ॥

ते नागपाशविशिखैरसुरेण बद्धाः
श्वासानिलाकुलमुखा[4] विमुखा रणस्य[5] ।
दिङ्नायका बलरिपुप्रमुखाः सरारि-
सूनोः समीपमगमन्विपदन्तहेतोः ॥ ६ ॥

त इति ॥ असुरेण तारकेण नागपाशविशिखैर्नागपाशरूपबाणैः कृत्वा बद्धाः । अत एव श्वासानिलैर्निःश्वासपवनैराकुलानि व्याप्तानि मुखानि येषाम् । अतएव रणस्य विमुखाः पराङ्मुखाः । भीतस्य च रणवैमुख्यं नानुचितमिति भावः । बलरिपुप्रमुखा इन्द्रप्रभृतयो दिङ्नायका अष्टदिगधिपाः कर्तारः विपदोऽन्तो नाशः स एव हेतुः कारणं तस्मात्स्मरारिसूनोः कुमारस्य समीपं संनिधिमगमन्प्रापुः ॥

दृष्टिप्रपातवशतोऽपि पुरारिसूनो-
स्ते नागपाशघनबन्धविपच्चिदुःखात् ।

---

[1] सहेलम्. [2] बाढम्. [3] त्रिदिवेन्द्र. [4] श्वासाकुल. [5] रणान्ताद्.

इन्द्रादयो मुमुचिरे स्वयमस्य देवाः
सेवां [1]व्यधुर्निकटमेत्य महाजिगीषोः ॥ ७ ॥

दृष्टीति ॥ त इन्द्रादयो देवाः पुरारिसूनोस्त्रिपुरशत्रुपुत्रस्य दृष्टिर्नेत्रम् । 'स्त्रियां दृष्टिः स्त्रियां बुद्धौ लोचने दर्शनेऽपि च' इति विश्वः । तस्याः प्रपातः पतनं तस्य वशतो वशेन प्रभुत्वेन । प्रभावेणेति यावत् । 'वशं मिथ्याप्रभुत्वयोः' इति विश्वः । नागपाशेन घनो दृढो बन्धो बन्धनमेव विपत्तिस्तेन यद्दुःखं ततस्तस्मान्मुमुचिरे मुक्ताः । अथ च महाजिगीषोरस्य कुमारस्य स्वयमात्मना न तु परोक्षेण निकटं सांनिध्यमेत्यागत्य सेवां सेवनम् । स्तुतिमिति फलितोऽर्थः । व्यधुश्चक्रुः ॥

अथ युग्मेनाह—

[2]उद्दीप्तकोपदहनोऽथ सुरेन्द्रशत्रु-
रह्नाय सारथिमवोचत चण्डबाहुः ।
बद्धा मया सुरपतिप्रमुखाः प्रसह्य
बालस्य धूर्जटिसुतस्य निरीक्षणेन ॥ ८ ॥
मुक्ता बभूवुरधुना तदिमान्विहाय
कर्ता[3]स्म्यमुं समरभूमिपशूपहारम् ।
तत्स्यन्दनं सपदि वाहय शंभुसूनुं
द्रष्टास्मि दर्पितभुजाबलमाहवाय ॥ ९ ॥

उद्दीप्तेति ॥ मुक्ता इति ॥ अथ नागपाशविमोचनानन्तरम् । उद्दीप्तः प्रदीप्तः कोप एव दहनोऽग्निर्यस्य । तथा चण्डौ प्रचण्डौ बाहू यस्य । एवंभूतः सुरेन्द्रशत्रुस्तारकोऽह्नाय झटिति 'भो सारथे, मया प्रसह्य बलाद्बद्धा नागपाशवशीकृताः सुरपतिप्रमुखा इन्द्रादयो देवा बालस्य शिशोः, न तु यूनः, धूर्जटिसुतस्य शिवपुत्रस्य निरीक्षणेन दर्शनमात्रेण, न तु प्रत्यस्त्रादिप्रयत्नेन, मुक्ता बभूवुः । अनेन शिशुनात्मनिरीक्षणेनैव स्वपक्षवर्तिनो देवा मोचिता अतो महाधन्योऽयमिति भावः । तत्तस्मान्मदीयशत्रूणां पक्षवृत्तित्वेन कृतनागपाशमोचनरूपापराधादिमान्पुरोवर्तिन इन्द्रादिदेवान्विहाय परित्यज्य । आहवाय । मया सहाहवं कर्तुमित्यर्थः । दर्पितमभिमानमूलकं भुजाबलं बाहुवीर्यं यस्य न तु तत्त्वतः, तथाभूतममुं पुरोवर्तिनं शंभुसूनुं द्रष्टास्मि द्रक्ष्यामि । लुट उत्तमैकवचनम् । अथ च समरभूमौ सङ्ग्रामभुवि ये पशवो गृध्रप्रभृतयस्तेषामुपहारमुपदारूपं कर्तास्मि करिष्यामि । प्रागवलोकितमेनमत्र हत्वा सङ्ग्रामभूमिस्थेभ्यो विहंगेभ्योऽमुं विभज्य दास्यामीत्यर्थः । तत्तस्माद्देवकार्यत्वात्सपदि सद्य एव स्यन्दनं

---

१ व्यधुश्च पुनरेत्य. २ उद्यत्प्रकोपदहनोऽथ सुरेन्द्रशत्रुः; उद्दण्डकोपदहनोप्यऽसुरेन्द्रसूनुः. ३ अहम्.

रथं वाहय प्रापय। अवश्यकर्तव्ये विलम्बानौचित्यादिति भावः। इति सार्धं-कपद्योक्तं सारथिमवोचत जगाद। 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः॥

तत्स्यन्दनः सपदि सारथिसंप्रणुन्नः
प्रक्षुब्धवारिधरधीरगभीरघोषः।
चण्डश्चचाल दलिताखिलशत्रुसैन्य-
मांसास्थिशोणितविपङ्कविलुप्तचक्रः॥ १०॥

तत्स्यन्दन इति॥ प्रक्षुब्धः कोपाविष्टः। अनेन प्रलयकालीन इति व्यज्यते, प्रायस्तत्रैव तस्य क्रोधाविष्टत्वदर्शनात्। यो वारिधरो मेघस्तस्य घोष इव धीरो गभीरो घनश्च घोषो यस्य तथोक्तः। तथा दलितं चूर्णीकृतमखिलं समस्तं यच्छत्रुसैन्यं वैरिसैन्यं तस्य मांसमस्थीनि शोणितविपङ्को रुधिरकर्दमश्चैतैर्विलुप्तानि चक्राणि चरणानि यस्य। अत एव चण्डः प्रचण्डस्तत्स्यन्दनस्तारकरथः सपदि। स्वामिनोऽनुशासनक्षण एव न तु मुहूर्तमात्रं स्थित्वेति भावः। सारथिना संप्रणुन्नश्चलितुं नोदितः सन् चचाल॥

दृष्ट्वा रथं प्रलयवातचलद्गिरीन्द्र-
कल्पं दलद्बलविरावविशेषरौद्रम्।
अभ्यागतं सुररिपोः सुरराजसैन्यं
क्षोभं जगाम परमं भयवेपमानम्॥ ११॥

दृष्ट्वेति॥ प्रलयवातेन युगान्तकालप्रभञ्जनेन चलतोड्डीयमानेन गिरीन्द्रकल्पं गिरीन्द्रेण हिमालयेनेषदूनम्। हिमालयौपम्यं धवलवसनवेष्टितत्वात्। 'ईषदसमाप्तौ कल्पप्' इति कल्पप्प्रत्ययः। तथा दलतामुपरि वेगपूर्वकवशाच्चूर्णीभवतां बलानां देवसैन्यानां विरावो हाहा हाहेति रुदितं तेन कृत्वा विशेषरौद्रमतिशयभयानकम्। आत्मीयघोरारवरौद्रत्वाश्रयीभूतत्वेऽप्यतिजवप्रपतनचूर्णीकृतसकलसुरसैन्यविहितमहाघोरविरावधारणाजनितरौद्रत्वधारणानुकूलव्यापाराश्रयीभूतमित्यर्थः। तथाभ्यागतं संमुखमागतं सुररिपोस्तारकस्य रथं दृष्ट्वा भयेन वेपमानं कम्पमानं सुरराजस्य महेन्द्रस्य सैन्यं सेनाजनसमूहः कर्तृ। परममतुलं क्षोभं व्यथां जगाम प्राप। तदीयरथावलोकनादेव क्षोभप्राप्तिः किं पुनस्तदीयाकृतिविलोकनादिति भावः॥

प्रक्षुभ्यमाणमवलोक्य दिगीशसैन्यं
शंभोः सुतं कलहकेलिकुतूहलोत्कम्।

---

१ प्रारब्ध. २ चण्डं. ३ शोणितसुपङ्कविलुप्तवेगः; शोणितसपङ्कविलुप्तचक्रः. ४ विराम. ५ समरकेलि.

उद्दामदोःकलितकार्मुकदण्डचण्डः
प्रोवाच वाचमुपगम्य स कार्तिकेयम् ॥ १२ ॥

प्रक्षुभ्यमाणमिति ॥ स तारको दिगीशसैन्यं देवसैन्यं प्रकर्षेण क्षुभ्यमाणं क्षोभं प्राप्नुवत् । बिभ्यदिति यावत् । क्षुभ्यतेर्दैवादिकत्वं तदाकृतिगणत्वाद्बोध्यम् । तथाभूतमवलोक्य दृष्ट्वोद्दामयोरुत्कटयोर्दोष्णोर्बाह्वोः कलितेन विहितेन कार्मुकरूपदण्डेन चण्डः सन् । कलहः सङ्ग्रामरूपो विग्रहः स एव केलिः, न तु प्रयत्नसाध्यं कर्म, तत्र यत्कुतूहलं तन्नोत्कम् । तदभिलाषुकमित्यर्थः । तथा शंभोः शिवस्य सुतं पुत्रम् । अनेन तारकवीररसस्यानुभाव उक्तः । कार्तिकेयं कुमारमुपगम्य समीपं गत्वा वाचं प्रोवाचावोचत् ॥

इतः परम् 'रे' इत्यादिभिस्त्रिभिः श्लोकैर्वाचमेव प्रपञ्चयति—

रे शंभु[1]तापसशिशो बत मुञ्च मुञ्च
दोर्दर्प[2]मत्र विरम त्रिदिवे[3]न्द्रकार्यात् ।
शस्त्रै[4]: किमत्र भवतोऽनुचितै[5]रतीव
[6]बालत्वकोमलभुजातुलभारभूतैः ॥ १३ ॥

रे इति ॥ रे इति नीचोक्तिसंबोधने । भोः शंभुतापसशिशो शंभुः शिवः स एव तापसस्तपस्वी । अनेन महाकृपणत्वं व्यज्यते । तस्य शिशो कौमारावस्थानुभवरसिक, अत्र मयि विषये । विधीयमानमिति शेषः । दोर्दर्पं भुजदण्डगतवीर्यहेतुकमभिमानम् । 'दर्पोऽहंकारकस्तूर्योः' इति विश्वः । मुञ्च मुञ्च । सर्वथैव मुञ्चेत्यर्थः । अथ च त्रिदिवेन्द्रकार्यान्मदीयवधरूपमहेन्द्रविधेयाद्विरम । अनुद्युक्तो भवेत्यर्थः । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् । नन्वनेकसाधनकर्माश्रयीभूतत्वेन त्वदीयवधं चिकीर्षुरहं कथं विरमामीत्याशङ्क्य न हि तव साधनानि मयि विषये परिपक्त्रिमाणि भविष्यन्तीत्याह—अतीव बालस्य भवतः संबन्धिनोः कोमलभुजयोर्बालत्वादतिशयपेलवबाह्वोरतुलं बहुभारभूतैः । दुर्वहैरित्यर्थः । अत एवात्र मय्यनुचितैरयोग्यैः शस्त्रैः कृपाणप्रभृतिभिः किम् । अपि तु न किमपीति भावः ॥

ए[7]वं त्वमेव[8] तनयोऽसि गिरिशगौर्योः
किं यासि कालविषयं विषमैः शरैर्मे ।
सङ्ग्रामतो[9]ऽपसर जीव पितुर्जनन्या-
स्तूर्णं[10] प्रविश्य वरमङ्कतलं विधेहि ॥ १४ ॥

---

१ शंभुतान्तव शिशो. २ दौर्हृद्यम्. ३ त्रिदिवेश. ४ शश्वत्. ५ असारैः; चरित्रैः, ६ बालत्वकोमलभुजक्रमभारभूतैः; बालाब्जकोमलभुजाक्रमभीरुभूतैः. ७ एकः. ८ एकतनयः. ९ तत्रासतः. १० पूर्णम्.

एवमिति ॥ रे शिशो, एवं नाम मद्विषयको यो दोर्दर्पस्तस्याङ्गीकारे रसिकः। त्वमिति शेषः। 'एवं प्रकारोपमयोरङ्गीकारावधारणे' इति विश्वः। विषमैर्दुःसहैर्मे मम शरैर्बाणैः कृत्वा कालविषयं दण्डधरदेशम्। संयमिनीं पुरीमित्यर्थः। किं किमर्थं यासि प्राप्नोषि। 'नीवृज्जनपदो देशविषयौ तूपवर्तनम्' इत्यमरः। ननु कालविषयप्राप्तौ कैव नः खलु वीराणां हानिरित्याशङ्क्याह—यतो गिरीशगौर्योः शिवपार्वत्योः। अत्र गिरीशस्याभ्यर्हितत्वाद्बह्वचोऽपि पूर्वनिपातः। त्वमेव तनयोऽसि पुत्रोऽसि। अतिकृच्छ्रलब्धैकपुत्रस्य वृद्धस्य तनयकर्मककालविषयप्राप्तिरतिदुःखावहा भवतीति भावः। एतेन मया सह भवता न कदापि योद्धव्यमिति व्यज्यते। तर्हि किं कर्तव्यं मयेत्यत्राह—सङ्क्रामत इति ॥ रे शिशो, सङ्क्रामतः समरसकाशादपसर पलायस्व। मदग्रे मा तिष्ठेत्यर्थः। अत एव जीव प्राणान्धरस्व। इतः पलायनमेव तव परमं जीवातुरिति भावः। ननु पलायनपूर्वकजीवनेन कः पुरुषार्थो भविष्यतीत्यत आह—पितुरिति ॥ पितुर्जनकस्य। तथा जनन्या मातुश्च। अङ्कतलमुत्सङ्गतलं तूर्णं शीघ्रं प्रविश्योपविश्य वरं श्रेष्ठम्। कृतार्थमिति यावत्। विधेहि कुरु। पुत्रस्यायमेव परमो धर्मो यन्मातापित्रोर्येन केनापि सद्व्यापारेण चित्तस्य। परितोषकृत्याश्रयो भवति। कथं सङ्क्रामतः पलायनं सद्व्यापारपदवाच्यमित्यस्याः शङ्कायाः पूर्वश्लोके तापसपदेन निवर्तितत्वात् ॥

इदानीं हितोपदेशव्याजेन पलायनविधिमुपदिशति—

सम्यक्त्वयं किल विमृश्य गिरीशपुत्र
जम्भद्विषोऽस्य जहिहि प्रतिपक्षमाशु।
एष स्वयं पयसि मज्जति दुर्विगाह्ये[1]
पाषाणनौरिव निमज्जयते पुरा त्वाम् ॥ १५ ॥

सम्यगिति ॥ भो गिरीशपुत्र शिवपुत्र, त्वं सम्यक्साधु यथा स्यात्तथा विमृश्य विचार्य। साधुविचारणमत्रोदर्कविचारणम्। तत्कृत्वास्य पुरोवर्तिनो जम्भद्विष इन्द्रस्य प्रतिपक्षं मां स्वयं किलात्मनैव, न तु परोक्षेण। प्रयोज्यकर्त्रेति यावत्। आशु सत्वरं जहिहि नाशय। साधु विचार्यैव मदीयहननकृत्याश्रयो भव। 'सहसा विदधीत न क्रियामविवेकः परमापदां पदम्। वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥' इति न्यायादिति भावः। प्रस्तुतेऽविमृश्य करणेन कैव विपत्तिरित्याशङ्क्याह—एष इति ॥ रे शिशो, एष जम्भद्विट् पुराग्रे दुःखेन कृच्छ्रेण विगाह्य उत्तार्ये पयसि नीरे। मदीयनाराचवर्षणरूप इत्यर्थः। पाषाणनौरिव प्रस्तरतरिरिव स्वयं मज्जति मङ्क्ष्यति। त्वां च निमज्जयते। निमज्जयिष्यत इत्यर्थः।

---

१ दुर्विगाहे; दुर्विगाढे.

'[illegible]–' इति भविष्यदर्थे लट् । यथा पाषाणघटितनौका पयःपतिता मज्जति आत्मोपर्यारूढांश्च निमज्जयति, तथायमिन्द्रोऽपि मदीयवोदवारावनिषयजलप्र-जलेनावृतः सम्भविष्यति । स्वात्माश्रयीभूतं त्वामपि तत्र पातयित्वा मारयिष्य-तीति वाच्यार्थः । अत आत्मजीवनाभिलाषुकत्वपक्ष एतदाश्रयीभूतत्वं विहाय वृद्धयोर्मातापित्रोः समीपमेव गन्तव्यम् । तेनेहामुत्र च महान्ति श्रेयांसि भविष्यन्तीति व्यङ्ग्यार्थः । तेनात्रालंकारेण वस्तुध्वनिः ॥

इत्थं निशम्य वचनं युधि तारकस्य
कम्प्राधरो विकचकोकनदारुणाक्षः ।
क्षोभात्त्रिलोचनसुतो धनुरीक्षमाणः
प्रोवाच वाचमुचितां परिमृश्य शक्तिम् ॥ १६ ॥

इत्थमिति ॥ युधि सङ्ग्रामे स्थितस्य तारकस्य संबन्धीत्थमेवंभूतं वचनं निशम्य श्रुत्वा क्षोभात्क्रोधाद्धेतोः कम्प्रः कम्पनशीलोऽधरोऽधरोष्ठो यस्य । क्रोध-वशादधरविस्फुरणं लोकप्रसिद्धमेव । तथा विकचकोकनदवत्फुल्लरक्तोत्पलवद-रुणे शोणिते अक्षिणी नेत्रे यस्य । क्रोधवशादरुणनेत्रत्वमपि प्रसिद्धमेव । एवं-भूतस्त्रिलोचनसुतः कुमारः शक्तिमात्मीयवीर्यवैभवं परिमृश्य तुलयित्वा । मदीय-वीर्यापेक्षया किमेतदीयवीर्यमित्यनादरपूर्वकमात्मीयशक्तेराधिक्यं परामृश्येत्यर्थः । धनुरीक्षमाणः पश्यन्सन् । अनेन त्वां क्षणादेव निहन्मि, सावधानो भव, मदीयैतद्धनुरग्रे कुतो यास्यसीति व्यज्यते । तेन वस्तुना वस्तुध्वनिः । उचितां योग्यां वाचं वचनं प्रोवाच प्रोचे ॥

दैत्याधिराज भवता यदवादि गर्वा-
त्तत्सर्वमप्युचितमेव तवैव किं तु ।
द्रष्टास्मि ते प्रवरबाहुबलं वरिष्ठं
शस्त्रं गृहाण कुरु कार्मुकमाततज्यम् ॥ १७ ॥

दैत्येति ॥ भो दैत्यानामधिराज तारकसंज्ञक महाराज, भवता त्वया गर्वाद्धे-तोर्यदवादि 'रे शंभुतापस–' ( १२ ) इत्यादिना यदुक्तं तत्सर्वमपि तवोचितमेव योग्यमेव । अभिमानिनो महाराजस्य तव बालत्वाद्दराकीभूतमदवज्ञा योग्यैव । ननु मदुक्त्यौचित्याज्ञानवतस्तव कथमयं सङ्ग्रामकरणसमारम्भ इति चेत्तत्राह— किं त्विति ॥ किं तु वरिष्ठमतिशयश्रेष्ठं ते त्वत्संबन्धि प्रवरौ प्रकृष्टौ श्रेष्ठौ यौ बाहू भुजौ तयोर्बलं वीर्यमेव द्रष्टास्मि द्रक्ष्यामि । त्वदीयपराजयं कृत्वा मदीयो विजयः स्यादित्यभिलाषे न मम तात्पर्यम्, किं तु लोकारोप्यमाणवीरता-श्रयीभूतेन मया त्वदीयवीरतावलोकनमेव युद्धकरणे तात्पर्यम् । वस्तुतस्तु मयि वीरत्वासंभवात्त्वया सह युद्धकरणानौचित्येऽपि तत्र प्रवृत्तिः केवलं बालत्वजनित-

१ कोपात्. २ परिमृज्य. ३ यदवोचि.

बालिशत्वमेवोन्नावयति । अतोऽपि भवता क्षन्तव्यम् । 'जनक इव शिशुत्वेऽसुप्रियस्यैकसूनोरविनयमपि सेहे पाण्डवस्य स्मरारिः' इत्यादिन्यायादिति भावः। अतो युद्धकरणपक्षे शस्त्रं कृपाणादिकं गृहाणादत्स्व। कार्मुकं धनुराततज्यं विस्तृतमौर्वीकं कुरु। युद्धार्थं शस्त्रसंधानेन सज्जो भवेति वाच्यार्थः॥

इत्युक्तवन्तमवदत्त्रिपुरारिपुत्रं
दैत्यः क्रुधौष्ठमधरं किल निर्विभिद्य[1]।
युद्धार्थमुद्भटभुजाबलदर्पितोऽसि[2]
बाणान्सहस्व मम सादितशत्रुपृष्ठान्[3]॥ १८॥

इतीति॥ इत्युक्तवन्तं निगदितवन्तं त्रिपुरारिपुत्रं कुमारं कर्म। दैत्यस्तारकः क्रुधा निमित्तेनाधरं नीचैरोष्ठम्। अधरोष्ठमित्यर्थः। निर्विभिद्य दन्तैश्चर्वयित्वा। रे बाल, सादितं विभिन्नं शत्रुपृष्ठं यैर्नेतु सुखम्। मदीयबाणानां तदुद्देशेनाभिगच्छतां प्रहृतिसहनासमर्थतया पलायमानत्वात्। एवंभूतान्मम बाणान्सहस्व। अपि तु त्वया न सहिष्यन्त इति ध्वन्यते। ननु बालत्वात्कथमहं सहे इत्याह—यतस्त्वं युद्धार्थं युद्धकरणायोद्भटे विपरीतलक्षणयानुद्भटे ये भुजे बाहू तयोर्बलं वीर्यं तेन दर्पितोऽसि संजातगर्वोऽसि। विपरीतलक्षणापक्षभुजानुद्भटत्वमेव न सहिष्यन्त इति व्यङ्ग्ये हेतुः। अतो मया सह कथंचिदपि त्वया न योद्धव्यमिति फलितोऽर्थः। 'द्वौ परौ द्वयोः। भुजबाहू' इत्यमरः॥

दुःप्रेक्षणीयमरिभिर्धनुराततज्यं
सद्यो विधाय विषमान्विशिखान्व्यधत्त।
स क्रोधभीमभुजगेन्द्रनिभं स्वचापं
चण्डं प्रपञ्चयति जैत्रशरैः कुमारे[4]॥ १९॥

दुरिति॥ स तारकः क्रोधेन भीमो यो भुजगेन्द्रस्तेन निभं सदृशम्। अत एव चण्डं प्रचण्डं स्वचापमात्मधनुर्जैत्रशरैर्जयसाधनबाणैः प्रपञ्चयति संदधति सति। अरिभिर्वैरिभिर्दुःप्रेक्षणीयं दुरवलोकनीयं धनुः सद्यः सपद्याततज्यं विस्तृतप्रत्यञ्चं विधाय कृत्वा विषमानतितीक्ष्णान्विशिखान्बाणान्व्यधत्त निदधे। कुमारं सज्जमवलोक्य स्वयमपि तथाभूदिति भावः॥

कर्णान्तमेत्य दितिजेन विकृष्यमाणं
कोदण्डमेतदभितः[5] सुषुवे[6] शरौघान्।

---

१ निर्विभुज्य. २ भुजावलिदर्पितः. ३ शातितशत्रुपृष्ठान्; शोणितरक्तपृष्ठान्. ४ चण्डं प्रपञ्चयति जैत्रशरे कुमारे; चण्डप्रभं यशसि जैत्रशरं कुमारः. ५ कोदण्डदण्डम्. ६ शुशुभे.

व्योमाङ्गणे लिपिकरान्किरणप्ररोहैः[1]
सान्द्रै[2]रशेषककुभां पलितंकरिष्णून्[3] ॥ २० ॥

कर्णान्तमिति ॥ दितिजेन तारकेण कर्णान्तं श्रवणप्रान्तमेत्य प्रापय्य । अन्तर्भावितणिजर्थः । आकर्णान्तमित्यर्थः । विकृष्यमाणं विस्तार्यमाणमेतत्कोदण्डं धनुः सान्द्रैः सघनैः किरणप्ररोहैर्मयूखाङ्कुरैः कृत्वा व्योमाङ्गण आकाशचत्वरे लिपिकराँल्लेपनकर्तॄन् । तथा अशेषककुभां समस्तदिशां संबन्धि पलितंकरिष्णू- अराजनितशौक्ल्यं कर्तुं शीलं येषाम् । 'अलंकृञ्–' इत्यादिनेष्णुच् । एवं- भूताञ्शरौघान्बाणसंघानभितः सर्वतः सुषुवे प्रासूत । कुमारोद्देशेन तारकनिः- क्षिप्तविशिखसमूहैर्व्योम दिशश्च व्याप्ता बभूवुरित्यर्थः । अनेन वाच्यार्थेन मदीय- विशिखनिचयव्याप्यमानोऽयं बाल इतिकर्तव्यताहीनः सन्नन्तरेव निरुद्धश्वासस्तथा प्रयत्नमन्तरैव मरिष्यति किं पुनराबोधनप्रयत्नेनेति व्यङ्ग्यार्थस्य प्रतीयमानत्वा- द्गम्योत्प्रेक्षोत्थापिततद्गुणालंकारेण वस्तुध्वनिः ॥

बाणैः सुरारिधनुषः प्रसृतैरनन्तै-
र्निर्घोषभीषित[4]भटो लसदंशुजालैः ।
अन्धीकृताखिलसुरेश्वरसैन्ये[5] ईश-
सूनुः कुतोऽपि विषयं न जगाम दृष्टेः ॥ २१ ॥

बाणैरिति ॥ सुरारेस्तारकस्य धनुषः कार्मुकसकाशात्प्रसृतैः । निःसृतैरिति फलितोऽर्थः । तथानन्तैरपारैः । असंख्यैरिति यावत् । लसद्दीप्यदंशुजालं किरणजालं येषाम् । अनेन सोल्का बाणा निःक्षिप्ता इति व्यज्यते । तथाभूतै- र्बाणैः कर्तृभिः । अन्धीकृतं सर्वत आच्छादितत्वात्प्रतिरुद्धविलोचनीकृतसकल- जनम् । अखिलं सर्वं यत्सुरेश्वरसैन्यमिन्द्रसैन्यं तत्र मध्ये । 'यतश्च निर्धारणम्' इति सप्तमी । निर्घोषेण निर्ह्रादेन भीषिता भयं प्रापिता भटा योधास्तारकपक्ष- वर्तिनो येन एवंभूत ईशसूनुः कुमारः कुतोऽपि कुत्रापि । सप्तम्यर्थे तसिः । दृष्टेर्विषयं गोचरं न जगाम । तारकपरिक्षिप्तशितशरगणैः सर्वत आच्छादितत्वा- त्कुत्रासौ कुमारो गत इति चिन्तयतां सैनिकानां दृगिन्द्रियग्रहणविषयतासंबन्धा- वच्छिन्नकोटिगणनाबहिर्भूतोऽभूदिति भावः। 'विषयो गोचरे देशे' इति मेदिनी ॥

देवेन मन्मथरिपोस्तनयेन गाढ-
माकर्णकृष्टमभितो धनुराततज्यम् ।
बाणानसूत निशिता[6]न्युधि यान्सुजैत्रा-[7]
स्तैः सायका विभिदिरे[8] सहसा सुरारेः ॥ २२ ॥

---

१ सकरप्रहासान्. २ अग्रैः. ३ पतिबत्करिष्यत्. ४ भटैः. ५ सैन्यकोऽसौ छन्नाकृतिः स; सैन्यकैः स छन्नः कुतोऽपि. ६ विविधान्. ७ विजैत्रैः; विजैत्रान्. ८ विबिदिरे.

देवेनेति ॥ मन्मथवैरिणः शिवस्य तनयेन पुत्ररूपेण देवेन कुमारेण गाढं दृढं यथा तथाकर्णकूटं कर्णं मर्यादीकृत्य कृष्टमाकृष्टम् । तथाततज्यं विस्तृतमौर्वीकं धनुः कर्तृ । शुष्यायोधनेऽभितः सर्वतः सुतरां जैत्राञ्जयनशीलाञ्शिशितांस्तीक्ष्णानन्यान्बाणानसूत । कुमाराकृष्टाद्धनुषः सकाशाच्छिशिता ये बाणा निःसृता इत्यर्थः । तैर्बाणैः कर्तृभिः । सुरारेस्तारकस्य सायका बाणा बिभिदिरे भिन्नाः । कर्मणि लिट् । अनेन वाक्ये यथा यामिनीनामन्धतमसमम्बरमणिकिरणसमूहेन दूरीक्रियते, तथा कुमारनिक्षिप्तप्रज्वलद्दोरायमाणसायकनिकरेण तारकनिक्षिप्तसायकजनितमन्धतमसं निराकृतमित्युपमा व्यज्यते । अतोऽत्र वस्तुनामालंकारध्वनिः ॥

रेजे सुरारिशरदुर्दिनके निरस्ते
सद्यस्तरां निखिलखेचरखेदहेतौ ।
देवैः प्रभाप्रभुरिव स्मरशत्रुसूनुः
प्रद्योतनः सुघनदुर्धरधामधामा ॥ २३ ॥

रेज इति ॥ निखिलाः समस्ता ये खेचराः सूर्यादयस्तेषां खेदस्य शरीरसंबन्धजनितदहनहेतुकदुःखस्य हेतौ निदाने सुरारेस्तारकस्य ये शरास्तैर्यद्दुर्दिनकं मेघच्छन्नदिवसस्तस्मिन्सद्यस्तरामतिसत्वरं निरस्ते दूरीकृते सति । सुतरां घनं सान्द्रं दुर्धरं दुर्धर्षणीयम् । दुःसहमिति यावत् । तथाभूतं यद्धाम तेजस्तस्य धाम स्थानम् । अत एव प्रकर्षेण द्योतते शोभते । कर्तरि ल्युट् । अथवा नन्द्यादित्वाल्ल्युः । तथाभूतः स्मरशत्रुसूनुः कुमारः । प्रभायाः कान्त्याः प्रभुर्देवः सूर्य इव । रेजे बभौ । यथा मेघजनितदुर्दिनोन्मुक्तोऽम्बरमणिः शोभते, तथा तारकविकीर्णसायकजनितदुर्दिनोन्मुच्यमानोऽसौ कुमारो रराजेत्यर्थः ॥

तत्राथ दुःसहतरं समरे तरस्वी
धामाधिकं दधति धीरतरं कुमारे ।
मायामयं समरमाशु महासुरेन्द्रो
मायाप्रचारचतुरो रचयांचकार ॥ २४ ॥

तत्रेति ॥ अथानन्तरं तत्र कुमारे धीरतरं गम्भीरतातिशयशालि धाम तेजोऽधिकं दुःसहतरं दधति सति । 'अयं बालोऽपि मदपेक्षयाधिकतरधामवान् अतः शस्त्रयुद्धेन नैव धर्षणीयः' इति मनोविषयविचारकर्तृकता व्यज्यते । समरे युद्धे तरस्वी बलवान्महानसुराणामिन्द्रस्तारको मायामयं मायारूपं समरं युद्धमाशु सत्वरं रचयांचकार निर्ममे । शस्त्रैरधर्षणीयोऽयं मायाप्रधानैरस्त्रैः

---

१ सद्यः स्वयम्; २ खिन्नदेहे. ३ देवप्रभोः प्रभुः. ४ धाम. ५ तरसा. ६ धामाधिकं दधति धीरतरे; धामादधावधिकधीरतरः. ७ समर.

परजयं प्राप्स्यतीति कुमारं [illegible] । [illegible] मायाप्रकारे मायानिर्माणे चतुरः कुशलः ॥

अट्टहाय कोपकलुषो विकटं विहस्य
व्यर्थां समर्थ्य परमायुधं कुमारे ।
जिष्णुर्जयाद्विजयदुर्ललितः सहेलं
वायव्यमस्त्रमसुरो धनुषि न्यधत्त ॥ २५ ॥

अट्टहायेति ॥ जिष्णुर्जयनशीलः, अत एव जगतां विजयेन दुर्ललित उद्धतः । तथा कोपेन क्रोधेन निमित्तेन कलुषोऽस्वच्छः । आविल इति यावत् । 'कलुषोऽस्वच्छ आविलः' इत्यमरः । असुरस्तारको विकटं करालं यथा स्यात्तथा विहस्य । इदानीं त्वां जेष्यामीति कुतो गमिष्यसीति विकटहासेन व्यज्यते । तथा कुमारे विषये परैः श्रेष्ठैः शस्त्रैः कृत्वा युधं युद्धम् । 'समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः' इत्यमरः । व्यर्थां [illegible] निरर्थकां समर्थ्य सिद्धान्तयित्वा । निश्चित्येति यावत् । सहेलं सावादरम् । अयं [illegible] नास्ति व्यर्थमेवात्र मायायुद्धमित्यवहेलनासहितं यथा स्यात्तथा । वायव्यं वायुदेवताकमस्त्रमट्टहाय झटिति धनुषि न्यधत्त निदधे ॥

[3]संधानमात्रमपि यस्य युगान्तकाल-
भूतभ्रमं परुषभीषणघोरघोषः ।
उद्धूतधूलिपटलैः पिहिताम्बराशः
प्रच्छन्नचण्डकिरणो व्यसरत्समीरः ॥ २६ ॥

संधानेति ॥ यस्य वायव्यास्त्रस्य संधानमात्रमपि कोदण्डे प्रक्षेपणार्थमारोपणमात्रमपि युगान्तकाल इव भूतानां प्राणिनां भ्रमो भ्रान्तिरोगो येन तथाभूतम् । यस्य प्रक्षेपणेऽस्ति शेषः । परुषः कठोरो भीषणो भयदायी घोरो महान् । परुषेण भयदत्वं दीर्घत्वेन भयदत्वं [illegible] भयदायित्वस्य विवक्षितत्वान्न पौनरुक्त्यम् । तथाविधो घोष आरवो यस्य । तथोद्धूतान्युपर्युत्पातितानि यानि धूलिपटलानि रजोमण्डलानि तैः कृत्वा पिहिता आच्छादिता अम्बरं व्योम दिशश्च येन । तथा प्रच्छन्नः निहितश्चण्डकिरणो रविर्येन तथाभूतः । एवंभूतश्च समीरो वायुर्व्यसरत्प्रससार । प्रचचालेति यावत् ॥

---

१ व्यर्थम्. २ जिष्णो. ३ संधानमात्रसममस्य; संधानकालसममस्य. ४ भूतभ्रमः. ५ पटलीपिहितान्तराशः; पटलीपिहिताम्बराशः; पटलीपिहिताम्बराशः. ६ व्यहरत्; अप्यचरत्.

कुन्दोज्ज्वलानि सकलातपवारणानि
धूतानि तेन मरुता सुरसैनिकानाम् ।
उड्डीयमानकलहंसकुलोपमानि
मेघोघधूलिमलिने नभसि प्रसस्रुः ॥ २७ ॥

कुन्दोज्ज्वलानीति ॥ कुन्दपुष्पवदुज्ज्वलानि विमलानि । श्वेतानीति फलितोऽर्थः । तथा तेन वायव्याख्यप्रभूतेन मरुता धूतानि कम्पितानि । उपर्युड्डीयितानीति यावत् । अत एवोड्डीयमाना उत्पतन्तो ये कलहंसा राजहंसास्तेषां कुलेन समुदायेनोपमा साहश्यं येषाम् । उत्पतत्कलहंससदृशानीत्यर्थः । सुरसैनिकानां देवरूपसेनालोकानां सकलातपवारणानि समस्तानि छत्राणि मेघाभ्र वर्षाकालीनपयोदसदृशभासो या धूलयः सेनोत्पतितरजांसि ताभिर्मलिने मेचके नभसि प्रसस्रुः । प्रभञ्जनवेगोड्डीयितानि विशदघर्मवारणान्युत्पतत्कलहंसकुलानीव रेजुरित्यर्थः ॥

विध्वस्य तेन सुरसैन्यमहापताका
नीता नभस्थलमलं नवमल्लिकाभाः ।
स्वर्गापगाजलमहौघसहस्रलीलां
व्यातेनिरे दिवि सिताम्बरकैतवेन ॥ २८ ॥

विध्वस्येति ॥ तेन प्रभञ्जनेन कर्त्राऽलं विध्वस्य भञ्जयित्वा नभःस्थलमाकाशतलं नीताः प्रापिताः । तथा नवमल्लिकाभा नूतनविदलन्मल्लिकाकुसुमसदृशभासः सुरसैन्यस्य महान्त्यः पताकाः सिताम्बरकैतवेन श्वेतवस्त्रव्याजेन स्वर्गापगाया जलस्य महतामोघानां पूराणां सहस्रस्य लीलां शोभां व्यातेनिरे वितस्तरिरे । उत्पतन्त्यो व्योमनि स्थिताः श्वेताः पताका अतिविदूरदोषेण अलघवोऽपि लघव इव प्रतीयमाना नभोमध्यगगनवाहिनीनिर्झरा इव रेजुरिति भावः । अत्र कैतवापह्नुतिनिदर्शनालंकारयोः संसृष्टिः ॥

धूतानि तेन सुरसैन्यमहागजानां
सद्यः शतानि विधुराणि दलत्कुथानि ।
पेतुः क्षितौ कुपितवासववज्रलून-
पक्षस्य भूधरकुलस्य तुलां वहन्ति ॥ २९ ॥

धूतानीति ॥ तेन वायुना । धूतानि कम्पितानि । नभसि भ्रामितानीति यावत् । अत एव विधुराणि पीडितानि । तथा दलन्तः 'चरट् चरट्' इति स्फुटन्तः कुथाः कम्बला येषाम् । 'कुथः स्त्रीपुंसयोर्वर्णकम्बले पुंसि बर्हिषि'

---

१ वरहंस. २ संग्रामधूलिमलिने; मेघाभ्रधूलिमलिने. ३ नभस्तलम्. ४ दिविचरी चिरविभ्रमेण; दिवि चराचरविभ्रमेण. ५ कुलानि. ६ गलत्कुथानि.

इति मेदिनी । अत एव कुपितस्य वासवस्य वज्रेण पविना लूनपक्षस्य छिन्नपक्षस्य भूधरकुलस्य पर्वतसमूहस्य तुलां साम्यं वहन्ति दधति । सुरसैन्यमहागजानां देवसैन्यबृहद्दन्तिनां शतानि शतसंख्याककुलानि क्षितौ भुवि पेतुः पतितवन्ति ॥

तास्ताः खरेण मरुता रथराजयोऽपि
दोधूयमाननिपतिष्णुतुरंगमाश्च ।
विस्रस्तसारथिकुलप्रवराः समन्ता-
द्व्यावृत्य पेतुरवनौ सुरवाहिनीनाम् ॥ ३० ॥

ता इति ॥ तास्ताः सुरवाहिनीनां देवसेनानां रथराजयोऽपि स्यन्दनपङ्क्तयोऽपि खरेण तीक्ष्णेन मरुता वायुना दोधूयमानाः पुनःपुनरतिशयेन वा कम्प्यमाना अत एव निपतिष्णवः पतनशीलास्तुरंगमा अश्वा यासाम् । तथा विस्रस्ता अधःपतिताः सारथय एव कुलप्रवराः कुलश्रेष्ठाः । कुलीना इति यावत् । यासाम् । तथाभूताः सन्त्यो नभसि समन्ताद्व्यावृत्य परिभ्रम्यावनौ पेतुः ॥

हित्वायुधानि सुरसैन्यतुरंगवाहा
वातेन तेन विधुराः सुरसैन्यमध्ये ।
शस्त्राभिघातमनवाप्य निपेतुरुर्व्यां
स्वीयेषु वाहनवरेषु पतत्सु सत्सु ॥ ३१ ॥

हित्वेति ॥ तेन वातेन विधुराः पीडिताः सुरसैन्यस्य देवसैन्यस्य तुरंगवाहा अश्ववाहाः । अश्वारोहा इति यावत् । सुरसैन्यमध्य आयुधानि भल्लादीनि हित्वा परित्यज्य स्वीयेष्वात्मीयेषु वाहनवरेषु श्रेष्ठवाहनेषु पतत्सु सत्सु शस्त्राभिघातं शस्त्रप्रहारमनवाप्यापि न प्राप्याप्युर्व्यां भूमौ निपेतुः ॥

तेनाहतास्त्रिदशसैन्यपदातयोऽपि
स्रस्तायुधाः सुविधुराः परुषं रसन्तः ।
वात्याविवर्तदलवक्रममेत्य दूरं
निःपेतुरम्बरतलाद्वसुधातलेऽस्मिन् ॥ ३२ ॥

तेनेति ॥ तेन प्रभञ्जनेनाहताः पीडिताः । अत एव स्रस्तान्यधःपतितान्यायुधानि शस्त्राणि येषाम् । अत एव सुतरां विधुरा दुःखिताः । करेभ्यः

---

१ श्रेष्ठाः. २ तुरंगमध्ये. ३ वित्रस्तसारथिवरप्रकराः; विध्वस्तसारथिरथप्रवराः. ४ व्यावृत्तिमापुः. ५ तुरंगधारावेगेन; तुरंगवारा दैत्येन. ६ विधुता विधुरा रणान्ते. ७ शस्त्राभिघातमथिताः परिपेतुः. ८ वारणवरेषु. ९ वात्याविधूतदलवक्रमम्, वायोर्द्विवृन्तदलवृन्दमिव. १० अपि; ते.

[illegible] [illegible] भवतीति भावः । तथा [illegible] कठोरं यथा [illegible] [illegible] [illegible] । [illegible] इति यावत् । [illegible]सैन्यपदातयोऽपि देव-सैन्यपादचारिणो योधा अपि । पूर्वोक्तानां गजादीनामपेक्षया समुच्चयार्थकोऽ-पिशब्दः । 'अपि संभावनाप्रश्नशङ्कागर्हासमुच्चये' इति विश्वः । वात्यया वातस-मूहेन विवर्तं भ्रान्तं यदेकं पत्रं तद्वद्दूरमतिशयेन श्रमं भ्रान्तिमेत्य प्राप्याम्बरत-लादाकाशमध्यादक्षिप्रवसुधातले भूतले निःपेतुः । वातसमूहविवर्तितानि वृक्ष-शुष्कपत्राणि यथाधः पतन्ति, तथा देवसैन्यपत्तयोऽपि वायव्यास्त्रजनितप्रभञ्जनव-शादम्बरमभित उड्डीयमानाः कियन्तमपि कालं तत्र रथचक्रवत्परिभ्रम्य प्रक्षी-णभ्रमणजवाः सन्तोऽधः पेतुरिति वाक्यार्थः । यथा पतितमपि दलं न चूर्णीभ-वति, तथाधःपतन्तोऽपि सैनिका न चूर्णीभूता इत्यभिहितयोपमया व्यज्यते । सति पतनेऽपि चूर्णत्वाभावे देवत्वादिति गूढो हेतुः । अतोऽलंकारेण वस्तुध्वनिः ॥

इत्थं विलोक्य सुरसैन्यमथो अशेषं
दैत्येश्वरेण विधुरीकृतमस्त्रयोगात् ।
स्वर्लोकनाथकमलाकुशलैकहेतु-
र्दिव्यं प्रभावमतनोदतनुः स देवः ॥ २३ ॥

इत्थमिति ॥ अथो तारकप्रयोजितवायव्यास्त्रकृतसैन्यविप्लवानन्तरम् । अत-नुर्महान् । महत्त्वं च विद्यया, विद्या चास्त्रशास्त्रनैपुण्यम् । स देवः षाण्मातुरः । अशेषं सकलं सुरसैन्यं देवसैन्यं कर्म दैत्येश्वरेण तारकेणेत्थं पूर्वोक्तप्रकारेणास्त्रयो-गादस्त्रप्रयोगान्निमित्ताद्विधुरीकृतं पीडितं विलोक्य दिव्यं लोकोत्तरं प्रभावं सामर्थ्यमतनोत् । अनेन वायव्यप्रतिरोधकं पवनाशनास्त्रमक्षिपदिति व्यज्यते । यतः स्वर्लोकनाथस्येन्द्रस्य कमलाया लक्ष्म्याः कुशले श्रेयस्येक एव हेतु-र्निदानम् ॥

तेनोज्झितं सकलमेव सुरेन्द्रसैन्यं
स्वास्थ्यं प्रपद्य पुनरेव युधि प्रवृत्तम् ।
दृष्ट्वासृजद्दहनदैवतमस्त्रमिद्ध-
मुद्दीप्तकोपदहनः सहसा सुरारिः ॥ २४ ॥

तेनेति ॥ तेन कुमारप्रभावेण सकलमेव, न तु स्तोकभागम् । उज्झितं वाय-व्यास्त्रनिर्मुक्तं सुरेन्द्रसैन्यं इन्द्रसैन्यं कर्म स्वास्थ्यमविकलत्वं प्रपद्य प्राप्य पुन-र्युध्येव, न त्वन्यकार्ये पलायनरूपे । एवंविधास्त्रप्रयोक्तासौ दुर्जेय इति बुद्ध्या । पलायनप्रसक्तिशङ्कानिरासार्थमेवकारः । प्रवृत्तं युद्धव्यापाराश्रयीभूतं

1 अशेषमेव. २ कमलाकलनैकहेतुम्; कमलाकुशलैकहेतुम्. ३ अतनुम्. ४ उद्धतम्; अन्वितम्. ५ युधे. ६ उच्चैःप्रकोपदहनः.

दृष्ट्वा । उद्दीप्तोऽश्रुभावसान्निध्यात्प्रदीप्तः कोप एव दहनोऽग्निर्यस्यैवंभूतः सुरारिस्तारकः सहसा झटिति, न तु विलम्बेन । इदं लिङ्गम्, न तु तत्कालसाधनीयम् । प्रदीप्तमिति वा । दहनदैवतमग्निदेवताकमस्त्रमस्त्रमसृजत् । 'सृज विसर्गे' इत्यस्मात्तौदादिकाल्लङ् । वाचव्यापपरिहारानन्तरं वह्न्यस्त्रमक्षिपदित्यर्थः ॥

वर्षातिकालजलदद्युतयो नभोन्ते
गाढान्धकारितदिशो घनधूमसंघाः ।
सद्यः प्रसस्रुरसितोत्पलदामभासो
दृग्गोचरत्वमखिलं नै हि सनयन्तः ॥ ३५ ॥

वर्षेति ॥ वर्षास्वतिकाला मेचकतरा ये जलदा मेघास्तेषां द्युतिः कान्तिरिव कान्तिर्येषाम् । वर्षाकालीनमेघसदृशमेचकितभास इत्यर्थः । श्यामत्वे द्वितीयविशेषणेनोपमिमीते । असितानां नीलानामुत्पलानां कमलानां दाम्नः स्रजो भा इव भा एषामत एव गाढं नितरामन्धकारिता विसंज्ञानामन्धकारीकृता दिशो यैरेवंभूता घनधूमसंघा निबिडधूमसमूहा अखिलं घटादिवस्तु दृग्गोचरत्वं दृग्विषयत्वं न हि नैव । 'हि पादपूरणे हेतौ विशेषेऽप्यवधारणे' इति विश्वः । नयन्तः प्रापयन्तः सन्तः । घनधूमसंघव्याप्त्यैव हि किंचिदपि वस्तु कस्यापि दृग्गोचरत्वं न बभूवेति भावः । सद्यः सपदि प्रसस्रुः । प्रज्वलितदहनप्राग्भावित्वेन धूमप्रसरणस्योचितत्वाद्धूमप्रसरणमुक्तम् । प्रपूर्वात् 'सृ गतौ' इत्यस्माल्लिट् ॥

दिक्चक्रवालगिलनैर्मलिनैस्तमोभि-
र्लिप्तं नेभःस्थलमलं घनवृन्दसान्द्रैः ।
धूमैर्विलोक्य मुदिताः खलु राजहंसा
गन्तुं सरः सपदि मानसमीषुरुच्चैः ॥ ३६ ॥

दिगिति ॥ दिशां चक्रवालस्य मण्डलस्य गिलनैराच्छादकैः । 'गॄ निगरणे' इत्यतः कर्तरि ल्युट् । 'अचि विभाषा' इति रेफस्य लत्वम् । तथा मलिनैर्मेचकैः, अत एव घनवृन्दमिव मेघमण्डलमिव सान्द्रैः सघनैर्धूमैर्धूमरूपैस्तमोभिर्लिप्तं व्याप्तं नभःस्थलं विलोक्य दृष्ट्वा मुदिताः प्रसन्ना राजहंसाः सपदि सद्य उच्चैर्महत्मानसं सरः पल्वलं गन्तुमीषुरैच्छन् । दहनाग्रभूतधूमावलीव्याप्तनभोदर्शनाज्जनितमेघागमभ्रान्तिमतां कलहंसानां मानससरोगमनाभिलाषोऽभिवृत्तेति भावः ॥

जज्वाल वह्निरतुलः सुरसैनिकेषु
कल्पान्तकालदहनप्रतिमः समन्तात् ।

---

१ तत्कालसाधनीयम्. २ तम. ३ सुतरां हरन्तः. ४ गिलितैः. ५ नभस्तलम्. ६ पिहिताः.

आशामुखानि विमलान्यखिलानि कीला-
जालैरलं कपिलयन्सकलं नभोऽपि ॥ ३७ ॥

अज्वालेति ॥ कल्पान्तकालस्य प्रलयकालस्य दहनोऽग्निस्तस्य प्रतिमेव प्रतिमा स्वरूपं यस्य । तथातुलो बहुलो वह्निः कीलाजालैर्ज्वालासमूहैः । 'वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्' इत्यमरः । अखिलानि समस्तानि विमलानि शुभ्राण्याशामुखानि दिगग्राणि । तथा सकलं नभोऽपि व्योम चालं कपिलयन्पिशङ्गीकुर्वन्सुरसैनिकेषु मध्ये । 'यतश्च निर्धारणम्' इति सप्तमी । समन्तात्परितो जज्वाल दिदीपे ॥

उज्जागरस्य दहनस्य निरर्गलस्य
ज्वालावलीभिरतुलाभिरनारताभिः ।
कीर्णं पयोदनिवहैरिव धूमसंघै-
र्व्योमाभ्यलक्ष्यत कुलैस्तडितामिवोच्चैः ॥ ३८ ॥

उज्जागरस्येति ॥ उज्जागरस्योद्दीप्तस्य । जागर्तेः 'ऋदोरप्' इति भावेऽप् । निरर्गलस्य निर्गतप्रतिबन्धस्य दहनस्य वह्नेरतुलाभिर्बहुलाभिरनारताभिरक्षणिकाभिर्ज्वालावलीभिः । कीलपङ्क्तिभिः । तथा पयोदनिवहैरिव मेघसमूहैरिव धूमसंघैः । व्याप्तमिति शेषः । तथाभूतं व्योम नभः कर्तृ । उच्चैर्महद्भिस्तडितां विद्युतां कुलैर्गणैः कीर्णं वृतमिवाभ्यलक्ष्यत दर्शनीयं बभूव । मेघमण्डलान्तरे चमत्कारकारिणीभिः क्षणदाभिर्नभो यथा राजति, तथा मेघमण्डलसदृशधूमसंघमण्डलान्तर्गतक्षणकालदृशज्वालावलीभिरपि बभावित्यर्थः । भानुक्रियाकर्तोभयत्राप्येक एव, अतो ज्वालावलीषु क्षणदात्वेनोत्प्रेक्षितम् ॥

गाढाद्भयाद्वियति विद्रुतखेचरेण
दीप्तेन तेन दहनेन सुदुःसहेन ।
दन्दह्यमानमखिलं सुरराजसैन्य-
मत्याकुलं शिवसुतस्य समीपमाप ॥ ३९ ॥

गाढादिति ॥ गाढाद्भयाद्धेतोर्वियति नभसि विद्रुता विद्राविताः । पलायिता इति यावत् । खेचरा रव्यादयो येन । रव्यादयो ग्रहा अपि यद्भयाद्दुद्रुवुरित्यर्थः । तथा दीप्तेन प्रदीप्तेन । तथा सुतरां दुःसहेन सोढुमशक्येन तेन दहनेन कर्त्रा दन्दह्यमानं पुनःपुनरतिशयेन वा दह्यते भस्मीक्रियते तथाभूतमत एवात्याकुलमतिपीडितमखिलं समस्तं सुरराजसैन्यं कर्तृ शिवसुतस्य कुमारस्य समीपं संनिधिमाप । अतो नः पाहीति निवेदयितुं जगामेति व्यज्यते । तेन वस्तुना वस्तुध्वनिः ॥

---

१ अपिदधच्छिखिकानि. २ कपिशयन्. ३ तद्भीतितः; तत्प्राभ्ततः. ४ चाद्रुतसंचरेण. ५ दीर्घेण. ६ अनिशम्. ७ आगात्.

इत्यग्निना घनतरेण ततोऽभिभूतं
तद्देवसैन्यमखिलं विकलं विलोक्य ।
सस्मेरवक्त्रकमलोऽन्धकशत्रुसूनु-
र्बाणासनेन[2] समधत्त स वारुणास्त्रम् ॥ ४० ॥

इतीति ॥ ततः सैन्यागमनानन्तरम् । सोऽन्धकशत्रुसूनुः कुमारः । इति पूर्वोक्तप्रकारेण घनतरेणातिसान्द्रेणाग्निनाभिभूतं पराभूतमखिलं समस्तं तद्देवसैन्यं विकलं विधुरं विलोक्य सस्मेरं समन्दहासं वक्त्रकमलं यस्य । किंचिद्विहस्येत्यर्थः । अनेनात्मोत्कर्षव्यञ्जक उपहासो व्यज्यते । बाणासनेन धनुषा वारुणास्त्रमग्न्यस्त्रप्रतिरोधकं वरुणदेवताकमस्त्रं समधत्त । संदध इत्यर्थः ॥

घोरान्धकारनिकरप्रतिमो युगान्त-
कालानलप्रबलधूमनिभो नभोन्ते ।
गर्जारवैर्विघटयन्नवनीधराणां[3]
शृङ्गाणि मेघनिवहो घनमुज्जगाम ॥ ४१ ॥

घोरेति ॥ घोराणि भयानकानि यान्यन्धकाराणि तमांसि तेषां निकरस्य समूहस्य प्रतिमेव प्रतिमा स्वरूपं यस्य । गाढान्धकारसदृशकान्तिरित्यर्थः । तथा युगान्तकालस्य योऽनलोऽग्निस्तस्य प्रबलोऽधिको यो धूमस्तेन सदृशः । तथा गर्जारवैर्गर्जनाघोषैः कृत्वावनीधराणां पर्वतानां शृङ्गाणि सानूनि विघटयन्स्फोटयन्मेघनिवहः पयोधरसमुदायो नभोन्ते व्योममध्ये घनं सान्द्रम् । न तु विरलतया । उज्जगामोदियाय ॥

विद्युल्लता वियति वारिदवृन्दमध्ये[4]
गम्भीरभीषणरवैः[5] कपिशीकृताशा ।
घोरा युगान्तचलितस्य भयंकराथ[6]
कालस्य लोलरसनेव चमच्चकार ॥ ४२ ॥

विद्युदिति ॥ अथ मेघोदयानन्तरं वियति नभसि गम्भीराः सान्द्रा अत एव भीषणा भयदा ये रवा घोषास्तैरुपलक्षिता । तथा कपिशीकृताः पिशङ्गिता आशा दिशो यया । तथा युगान्तचलितस्य प्रलयकाले लोकादनाय प्रस्थितस्य कालस्य यमस्य भयंकरा भयदा लोलरसना चपलजिह्वेव घोरा भीमा विद्युल्लता तडिद्रूपिणी हाटकलता वारिदवृन्दमध्ये जलदमण्डलान्तराले चमच्चकार । प्रतिक्षणव्यक्तीकृतात्मरोचिरासीदित्यर्थः । अनेनोपमालंकारेण तारकासुरसैनिकानामिषमिव चमत्कुर्वन्ती वैवस्वतरसना नोऽभ्यवहरिष्यतीति बुद्धिरुत्पन्नेति व्यज्यते । अतोऽलंकारेण वस्तुध्वनिः ॥

---

1 लता. 2 बाणासनेऽथ. 3 विघमयन्. 4 वृन्दवर्गः, वृन्दवर्षे. 5 रवे. 6 भयंकरस्य.

कादम्बिनी विरुरुचे विषकण्ठिकाभि-
र्[1]त्पालकालरजनीजलदावलीभिः[2] ।
व्योम्न्युच्चकैरविरलप्[3]परिदीपिताशा-
दृष्टिच्छदा[4] विषमघोषविभीषणा[5] च ॥ ४३ ॥

कादम्बिनीति ॥ अविरलाभिर्विद्युद्भिः प्रयोज्यकर्त्रीभिः परिदीपिताः प्रकाशिता आशा यया प्रयोजककर्त्र्या । तथाऽदृष्टिच्छदा दृष्टिच्छदा नेत्रावरणकर्त्री सा न भवतीति, किं तु नेत्रप्रकाशिका । 'पुंसि संज्ञायां घः' इति घः । 'छादेर्घे' इति ह्रस्वः । तथा विषमेण करालेन घोषेण विभीषणा भयदा । उच्चकैर्महति व्योम्न्यन्तरिक्षे विषं जलम् । 'विषं तु गरले तोये' इति विश्वः । कण्ठे मध्ये यासाम् । जलपूर्णमध्याभिरित्यर्थः । उत्ताला विकरालाः । 'उत्तालो होमकुण्डे स्यान्मूर्ते चोत्ताल उत्कटे । श्रेष्ठेऽपि विकरालेऽपि स्यादुत्ताल: प्लवंगमे ॥' इति विश्वः । तथा कालाः कृष्णपक्षीयाः । 'कालश्यामलमेचकाः' इत्यमरः । एवंभूता या रजन्यो रात्रयः । 'रजनी यामिनी तमी' इत्यमरः । ता इव या जलदावल्यो मेघपङ्क्तयः । 'मयूरव्यंसकादयश्च' इति समासः । ताभिरुपलक्षिता कादम्बिनी-माला विरुरुचे बभौ । अत्र कादम्बिनीशब्दः केवलमालापरः । तदुक्तम्—'विशिष्टवाचकानां पदानां सति हि पृथग्विशेषणसमवधाने विशेष्यमात्रपरता' इति ॥

व्योम्नस्तलं पिदधतां ककुभां मुखानि
गर्जारवैरविरतैस्तुदतां[6] मनांसि ।
अम्भोभृतामतितरामनणीयसीभि-
र्धारावलीभिरभितो ववृषे समूहैः ॥ ४४ ॥

व्योम्न इति ॥ व्योम्न आकाशस्य तलं स्वरूपम् । 'तलं स्वरूपाधरयोः खड्गमुष्टिचपेटयोः' इति विश्वः । तथा ककुभां दिशां मुखान्यग्राणि च पिदधतामाच्छादयताम् । 'पिधानाच्छादनानि च' इत्यमरः । तथाऽविरतैर्निरन्तरमवन्निर्गर्जारवैर्गर्जनाघोषैः कृत्वा मनांसि तुदतां व्यथयतामम्भोभृतां जलधराणां समूहैः कर्तृभिः । अनणीयसीभिरणीयस्योऽतिकृश्यो न भवन्ति तयोक्ताभिः । महतीभिरित्यर्थः । धारावलीभिः संपातपङ्क्तिभिः कृत्वातितरां ववृषे वृष्टम् । भावे लिट् ॥

---

१ मिल. २ रजनीव रदावलीभिः. ३ अविररोचताभ्रे. ४ दृष्टिच्छलात्; दृष्टिच्छला. ५ विषमकोपविभीषणेव; विषमरोषविभीषणेव. ६ अविततैः.

४४–४५ श्लोकयोर्मध्ये क्षेपकोऽयं दृश्यते—

वेल्लीयसाधितकराः सहसा रसेन प्रन्स्यन्टे निजकुलेऽप्यंकुरप्रकटे ।
भेषाम्बकारपटलीपिहिते नभोन्ते नवः प्रवेष्टुरभितः प्रेमदा इवाशाः ॥

( १ वंडीमसा. २ इव मुग्नकृटे. ३ प्रमदाहृपाय. )

घोरान्धकारपटलैः पिहिताम्बराणां
गम्भीरगर्जनरवैर्व्यथितासुराणाम् ।
कृत्वा तथा जलमुचां वरुणात्मजानां
विश्वोदरंभरिरपि प्रशशाम वह्निः ॥ ४५ ॥

घोरेति ॥ घोराणि भयदानि यान्यन्धकारपटलान्यन्धतमसपटलानि तैः कृत्वा पिहिताम्बराणामावृतगगनानाम् । तथा गम्भीरगर्जनरवैः कृत्वा व्यथिताः पीडिता असुरा यैस्तेषां वरुणात्मजानां वरुणदेवताकोत्पन्नानां जलमुचां मेघानाम् । तथाद्वितीयया कृत्वा वर्षेण विश्वेन समस्तजगता कृत्वोदरं भरतीति तथोक्तोऽपि समस्तलोकव्याप्यमानोऽपि वह्निरग्निः प्रशशाम । कुमारकृतवारुणास्त्रप्रयोगेणाग्न्यस्त्रमप्यशाम्यदिति भावः ॥

दैत्योऽपि रोषकलुषो निशितैः क्षुरप्रै-
राकर्णकृष्टधनुरुत्पतितैः स भीमैः ।
तद्भीतिविद्रुतसमस्तसुरेन्द्रसैन्यो
गाढं जघान मकरध्वजशत्रुसूनुम् ॥ ४६ ॥

दैत्य इति ॥ रोषेण क्रोधेन कलुष आविलः । 'कलुषं त्वाविले पापे' इति मेदिनी । स दैत्योऽपि निशितैः शरैः । अत एव भीमैर्भयदैः । तथाकर्णमाश्रवणं कृष्टाद्धनुषः सकाशादुत्पतितैर्निःसृतैः क्षुरप्रैः शरविशेषैः कृत्वा । तेभ्यः क्षुरप्रेभ्यो भीत्या निमिषेण विद्रुतं विद्रावितं समस्तं सुरेन्द्रसैन्यं पुरंदरबलं येन । 'सैन्यं क्लीबं बले सेनासमवेते तु वाच्यवत्' इति मेदिनी । तथाभूतः सन् । गाढं दृढं यथा स्यात्तथा मकरध्वजस्य कामस्य शत्रोः शंभोः सूनुं पुत्रं जघान । प्राणापहरणकरणाभिप्रायेण हिनस्ति स्मेत्यर्थः । 'पुनस्त्रैवाककम्पितो वेतालः' इति न्यायेन मायया सुखेन जेय एवेति मन्यमानेन तारकेण बाणसमरं हित्वा मायासमरं कुर्वाणेन तत्र सत्यपि दुर्जेयतायुक्तस्य गुण-बाणयुद्धमकार्षीदित्यर्थः । अनेन वाक्यार्थेन 'अप्रतिहतप्रचारा मदीया मायाप्यनेन वीरेण प्रतिहता' इति शोकग्रस्तेन दैत्येन यथा पराजितेनापि विदुषा युक्त्या विवाद्यते तथा युध्यते, न तु वीररसानुगतत्वेनेति ध्वन्यते ॥

देवोऽपि दैत्यविशिखप्रकरं सचापं
बाणैरकर्त कणशो रणकेलिकारी ।

---

१ आप्लावितो बहुमघोऽपिहिताम्बराणां गम्भीरगर्जनिपतद्द्विषुरासुराणाम् ; आप्लाविताह्यमुना पिहिताम्बराणां गम्भीरगर्जितपतद्द्विषुरासुराणाम्. २ अथ. ३ कोपकलुषः. ४ सैन्यैः. ५ प्रवरम्. ६ रणकेलिकारः.

योगीव योगविधिशुष्कमना यमाद्यैः
सांसारिकं विषयसंघममोघवीर्यम् ॥ ४७ ॥

देवोऽपीति ॥ रण एव केलिः क्रीडा तां करोति । सङ्ग्रामरूपक्रीडाविधायीत्यर्थः । देवोऽपि कुमारोऽपि बाणैः शरैः सचापं सकोदण्डं दैत्यस्य तारकस्य विशिखानां शराणां प्रकरं समूहं योगविधिना योगाभ्यासविधानेन शुष्कमना नीरसमनाः । निःस्पृहचेता इति तात्पर्यार्थः । योगी यमाद्यैर्यमनियमप्रभृतिभिर्योगसाधनैः कृत्वामोघवीर्यं योगिनामपि मनःसंभ्रान्तिकरणे सफलप्रभावं सांसारिकं संसारः प्रयोजनमस्येति तथोक्तम् । प्रयोजने ठञ् । विषयसंघं चक्षुरादिकरणोपभोग्यसमाहारमिव कणशश्चकर्त बिभेद । यथा योगाभ्यासनिरतो यमनियमपूर्वैश्चक्षुरादिकरणभोग्यं दर्शनीयादिकरणवस्तु कृन्तति, तथा कुमारोऽपि यमनियमवत्तीव्रैर्बाणैर्विषयसंघमिव सफललक्ष्यभेदनक्रियोचितत्वमपि शरनिकरमभनमिति भावः ॥

भ्रूभङ्गभीषणमुखोऽसुरचक्रवर्ती
संदीप्तकोपदहनोऽथ रथं विहाय ।
क्रीडत्करालकरवालकरोऽसुरेन्द्र-
स्तं प्रत्यधावदभितस्त्रिपुरारिसूनुम् ॥ ४८ ॥

भ्रूभङ्गेति ॥ अथ शस्त्रास्त्रयुद्धानन्तरं सम्यगधिकं यथा तथा दीप्तः कोप एव दहनोऽग्निर्यस्य । अत एव भ्रुवोर्भ्रुकुट्योर्भङ्गेन वक्रत्वेन भीषणं विलोकयितॄणां भयदं मुखं वदनं यस्य तथोक्तोऽसुराणां दैत्यानां चक्रवर्ती सम्राट् । सार्वभौम इत्यर्थः । 'राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः । चक्रवर्ती सार्वभौमो नृपोऽन्यो मण्डलेश्वरः' इत्यमरः । असुरेन्द्रस्तारको रथं स्यन्दनं विहाय परित्यज्य क्रीडत्पूर्ववृत्ति कम्पमानस्तथा करालो भीषणः करवालः खड्गः स करे पाणौ यस्य । धारितविकटकृपाणः सन्नित्यर्थः । तं त्रिपुरारिसूनुं शिवपुत्रमभितः संमुखं प्रत्यधावत् । कुण्ठितसर्वशस्त्रास्त्रत्वात्करवालेन शिरोनालजिहीर्षया प्रतिदुद्रावेत्यर्थः । 'धावु गतौ' इत्यस्मात्कर्तरि लङ् ॥

अभ्यापतन्तमसुराधिपमीशपुत्रो
दुर्वारबाहुविभवं सुरसैनिकैस्तम् ।
दृष्ट्वा युगान्तदहनप्रतिमां मुमोच
शक्तिं प्रमोदविकसद्वदनारविन्दः ॥ ४९ ॥

अभ्यापतन्तमिति ॥ सुरसैनिकैर्देवसेनाजनैर्दुर्वारो दुःसहो बाहुविभवो भुजवीर्यं यस्य । सुरसैनिकैर्दुर्जेयमित्यर्थः । तमसुराधिपं दैत्यराजमभ्यापतन्तं

१ विनिघ्नमनाः. २ विषयवर्गम्. ३ अमोघवीर्यैः. ४ दधानश्चर्माभ्यधावत्. ५ पुत्रम्. ६ असुरेश्वरम्. ७ तैः.

संमुखमागच्छन्तं दृष्ट्वा विलोक्येशपुत्रो महेशतनयः कुमारः प्रमोदेन प्रदीपव-ल्लंगतरंजनितानन्देन विकसद्विपक्षदनारविन्दं मुखकमलं यस्य । किंचिद्विह-स्येत्यर्थः । युगान्तदहनस्य प्रलयकालीनानलस्य प्रतिमेव प्रतिमा प्रतियातना यस्याः । प्रज्वलद्दहनकीलाजालपरिवृतामित्यर्थः । शक्तिमायुधविशेषं मुमोच । 'शक्तिः प्रहरणान्तरे' इति विश्वः ॥

उद्योतिताम्बरदिगन्तरमंशुजालैः
शक्तिः पपात हृदि तस्य महासुरस्य ।
हर्षाश्रुभिः सह समस्तदिगीश्वराणां
शोकोष्णबाष्पसलिलैः सह दानवानाम् ॥ ५० ॥

उद्योतितेति ॥ अत्र सेति शेषः । सा कुमारमुक्ता शक्तिः समस्ता ये दिगीश्वरा इन्द्रादयोऽष्टदिक्पालास्तेषां हर्षाश्रुभिरानन्दबाष्पैः सह । तेषामभिल-षितत्वाद्युक्तमेव तदीयहृदयशक्तिपतनजनित आनन्दो यदासीत् । दानवानां तदीयपक्षपातिनां रक्षसां शोकेन भर्तृमरणजनितेनोष्णानि यानि बाष्पसलिलानि तैः सह । अंशुजालैः किरणसमूहैः कृत्वोद्योतितं प्रकाशितमम्बरस्य दिशां चान्तरं मध्यं यत्र यस्यां क्रियायां यथा भवति तथा । उज्ज्वालितसकलदिगम्बर-मध्यं तस्य महासुरस्य तारकस्य हृदि हृदये पपात पतितवती ॥

शक्त्या हृतासुमसुरेश्वरमापतन्तं
कल्पान्तवातहतभिन्नमिवाद्रिशृङ्गम् ।
दृष्ट्वा प्ररूढपुलकाञ्चितचारुदेहा
देवाः प्रमोदमगमंस्त्रिदशेन्द्रमुख्याः ॥ ५१ ॥

शक्त्येति ॥ शक्त्या कर्त्र्या हृता अपगमिता असवः प्राणा यस्य । शक्ति-प्रहारेण गतप्राणमित्यर्थः । एवंभूतमसुरेश्वरं तारकं कल्पान्तवातेन प्रलयकालीं-नप्रभञ्जनेन हतमास्फोटितमत एव भिन्नं विदीर्णमद्रिशृङ्गमिव पर्वतसानुमिवापत-न्तं मूर्छन्तं दृष्ट्वा प्ररूढैः प्रोद्गतैः पुलकैः रोमभिरञ्चिता व्याप्ता अत एव चा-रवो मनोहरा देहा गात्राणि येषां प्रफुल्लितरोमाञ्चितविग्रहास्त्रिदशेन्द्रमुख्याः पुरंदरप्रभृतयो देवाः प्रमोदमानन्दमगमन्प्रापुः ॥

यत्रापतत्स दनुजाधिपतिः परासुः
संवर्तकालनिपतच्छिखरीन्द्रतुल्यः ।
तत्राऽदधात्फणिपतिर्धरणीं फणाभि-
स्तद्भूरिभारविधुराभिरधो व्रजन्तीम् ॥ ५२ ॥

१ समम्. २ शोकोत्थ. ३ हतासुम्; अथ तारम्. ४ हृति. ५ प्ररूढपुल-काञ्चित; अवरूढपुलकाचित. ६ त्रिदिवेशमुख्याः. ७ संवर्तवात. ८ कल्पः.

